श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ समस्तगुणपूर्णायदोषदूरायविष्णवे । नमःश्रीप्रा
णनाथायविश्वादिचतुरात्मने । अस्याउपनिषदोमंडूकरूपीवरुणऋषिः । चतूरूपीहरिर्देवता । केषांचिच्छंदोबद्धानामक्षरग
णनयानुष्टुप्छंदस्त्वंज्ञेयं । मुमुक्षोरधिकारिणोखिलक्लेशनिवृत्तिविशिष्टपरमानंदावाप्तये समस्तव्यस्तप्रणवप्रतिपाद्यभगवदु
पासनांवक्तुंप्रवृत्तेयमुपनिषत् । आदौसमस्तप्रणवप्रतिपाद्यंतावदाह । ओमित्यादिनाऽयमात्माब्रह्मेत्यंतेन । एतदितिश्रवणा
द्यदित्यन्वेति । ओमित्युक्तमितिशेषः । ओतंजगदस्मिन्निति व्युत्पत्त्याओमित्युक्तंयद्ब्रह्म एतदक्षरमुच्यते । इदमक्षरंसर्वंगुण

**हरिः ॐ ॥ ॐमित्येतदक्षरमिदंसर्वं ॥ तस्योपव्याख्यानंभूतंभवद्भविष्यदिति ॥ १ ॥ सर्वमोंकार**
**एवयच्चान्यत्रिकालातीतंतदप्योंकारएव । सर्वंह्येतद्ब्रह्म । अयमात्माब्रह्म ॥ २ ॥**

पूर्णं केननिमित्तेनोंकारवाच्यंब्रह्माक्षरमित्युच्यतइत्यतो नक्षरतिकालत्रयेपीति व्युत्पत्त्या कालत्रयेप्येकप्रकारतयानित्यत्वहे
तुनेतिभावेन प्रतिज्ञापूर्वकंप्रवृत्तिनिमित्तमाह । तस्येति । विशिष्याख्यायतेनेनेतिव्याख्यानं प्रवृत्तिनिमित्तं । तस्योमित्यक्ष
रप्रतिपाद्यस्याक्षरशब्दार्थत्वेउपपन्नंव्याख्यानमुच्यतइत्यर्थः । तत्किमित्यतआह । भूतमिति । ओमित्युक्तंब्रह्म भूतंअती
तकालेविद्यमानं । भवद्वर्तमानकालेसत् भविष्यत्आगामिकालेपिसत् । शश्वदेकप्रकारमितियावत् । अतोक्षरमुच्यतइ ॥ १ ॥
त्यर्थः । इतिशब्दस्योपव्याख्यानमितिपूर्वेणान्वयः ॥ १ ॥ यदक्षरस्यसर्वमित्यनेनपूर्णत्वमुक्तं तदन्यस्याप्यस्तिकिमित्य

तोनेत्याह । सर्वमिति । ओमित्याक्रियतेप्रतिपाद्यतइत्योंकारः । कृञः कर्मणिघञ्प्रत्ययः । अचोञ्णितीतिवृद्धिः ।
घञबंतःपुंसीतिपुल्लिंगता । ओमित्युच्यमानमक्षरमेवसर्वपूर्णंनत्वन्यदित्यर्थः । भूतमित्यादिनोक्तंशश्वदेकप्रकारत्वरूपकाल
त्रयातीतत्वमक्षरपदप्रवृत्तिनिमित्तमपिनान्यस्येत्याह । यच्चान्यदिति । कालत्रयकृतविकारहीनरूपंत्रिकालातीतंचयदन्यच्चि
त्प्रकृतिरूपमस्तितदप्योंकारएव । ओमित्युच्यमानाक्षराख्यंब्रह्मैव । नततोन्यत्तादृशमस्तीत्यर्थः । श्रीतत्वेशश्वदेकप्रकारत्व
रूपंकालत्रयातीतत्वमीशप्रसादायत्तंनस्वतइतिभावः । यद्वायत्कालत्रयातीतंतदप्योंकारएव । अन्यच्चश्रीतत्वंच । तदुभया

**सोयमात्माचतुष्पात् । जागरितस्थानोबहिःप्रज्ञःसप्तांगएकोनविंशतिमुखःस्थूलभुग्वैश्वानरःप्रथमःपादः ॥ ३ ॥**

न्यत्कालत्रयातीतंनेत्येवकारार्थः । सर्वमोंकारएवेत्यत्रोंपदवाच्यब्रह्मणःपूर्णत्वमुक्तं । तत्कुतइत्याशंकांप्रमाणसूचनेननिराह ।
सर्वंह्येतद्ब्रह्मेति । एतदोंपदवाच्यमक्षराख्यंब्रह्मसर्वपूर्णंहि । परमंयोमहद्ब्रह्म । तदेवब्रह्मपरमंकवीनां । पूर्णमदःपूर्णमिदमित्या
दिषुप्रसिद्धमित्यर्थः । ननुजीवानांहिताहितक्रियास्वस्वातंत्र्यानुभवेनतेष्वपिकश्चिदस्तिनियतेत्यनुमितस्यापिगुणपूर्त्यादेरपे
क्षणीयत्वात्कथमोंपदवाच्यस्यैवपूर्णत्वादीत्यतोऽयमेवतत्रापिनियंतानान्यइत्याह । अयमिति । श्रीब्रह्मादिष्वादानादि
कर्तृतयास्थितोयआत्माऽयं ब्रह्म प्रागुक्तमोंपदवाच्यंब्रह्मैव । नत्वन्यःकश्चिदित्यर्थः । येनतस्यैवपूर्णत्वादीत्येतन्नस्यादिति
भावः । समस्तप्रणवप्रतिपाद्योक्तिः ॥ २ ॥ एवंसमस्तप्रणवप्रतिपाद्यमुपासनार्थंनिरूप्येदानींतदेकदेशैरकारोकारमकार

नादैः प्रतिपाद्यानांविश्वादिभगवद्रूपाणामुपासनमकारोकारमकारइत्यादिनातृतीयखंडेवक्तुंतानिरूपाण्याह । सोयमिति ।
सःसमस्तोंपदवाच्योक्षरनामाऽयं श्रीब्रह्मादिषुनियामकतयास्थितआत्माचतुष्पात् । चत्वारःपादाःअंशाःस्वरूपभू
तायस्यसचतुष्पात् । पादपदस्यसंख्यासुपूर्वस्येत्यंतलोपः । सर्वजीवनियामकतयातत्तद्देहेषुचतूरूपतयातिष्ठतीत्यर्थः ।
कानितेषांस्थानानिकश्चव्यापारःकीदृशानितानिरूपाणिकिंतेषांभोग्यंकानिनामानीत्यतस्तत्सर्वंक्रमेणाह । जागरितेति । य
त्रस्थित्वाजागर्तितच्चक्षुर्जागरितं । अधिकरणेक्तप्रत्ययः । तदेवस्थानंयस्यसजागरितस्थानः । चक्षुस्थानइत्यर्थः । ब
हिःप्रज्ञःबहिश्शब्दोबाह्यार्थपरः बहिर्बाह्यार्थान्प्रज्ञापयतीतिबहिःप्रज्ञः । जानातेरंतर्णीतण्यर्थादिगुपधज्ञाप्रीकिरःकइतिकप्र

**स्वप्नस्थानोंतःप्रज्ञःसप्तांगएकोनविंशतिमुखःप्रविविक्तभुक्तैजसोद्वितीयःपादः ॥ ४ ॥**

त्ययः । आतोलोपइटिचेत्याकारलोपः । सप्तांगःचत्वारोहस्ताःद्वौपादौगजमुखत्वाद्गजहस्तएकइतिसप्तांगः । एकोनविं
शतिमुखःनवोत्तरदशमुखः । मध्यममुखंगजमुखाकारं पार्श्वद्वयेतुनवनवमुखानिपुरुषमुखाकाराणीतिविवेकः । स्थूलभुक्स्थू
लान्शुभभोगान्भुंक्तइतिस्थूलभुक् । वैश्वानरःविश्यतेगम्यतेसर्वैर्ज्ञायतइतिविश्यतेःकर्मणिवप्रत्ययः । अनेकार्थत्वाद्धातूनां
विशतिरत्रगत्यर्थस्सन्ज्ञानपरः । विश्वंसर्वैर्ज्ञेयंस्थूलंवस्तूच्यते । भोक्तृतयातत्संबंधीवैश्वःनरीयतेनक्षीयतेइतिनरः । रीङ्क्षये
डप्रत्ययःवैश्वश्चासौनरश्चनरेचसंज्ञायामितिसूत्रेणभाष्योक्तनिरुक्तिबलाद्वादीर्घोवैश्वानरःप्रथमःपादः । आत्मनइतिविपरिणा
मेनात्रोत्तरत्रचानुषंगः । सर्वदेहेष्वादानादिकर्तृत्वेनस्थितस्यात्मनःप्रथमंरूपमित्यर्थः ॥ ३ ॥ स्वप्नस्थानःयत्रस्थित्वाजीवः

स्वाप्नपदार्थान्पश्यतिसस्वप्नःतदेवस्थानंयस्यसस्वप्नस्थानः । कंठदेशस्थइत्यर्थः । अंतःप्रज्ञःअंतश्शब्दोत्रबाह्यार्थज्ञानजन्यवासनापरिणामरूपार्थपरः । तान्अंतस्थितान्वासनाम(यपदार्था)यार्थान्प्रज्ञापयतिजानातिचेत्यंतःप्रज्ञःप्रज्ञइतिजानातेःकः । सप्तांगएकोनविंशतिमुखइतिप्राग्वत् । प्रविविक्तभुक्वासनामयतयाबाह्यार्थेभ्योविविक्तान्स्वाप्नार्थान्भुंक्तेभोजयतिचेतिप्रविविक्तभुक् । तेजोमयचित्तस्थतयाचित्तसंबंधित्वेनतैजसनामाआत्मनोद्वितीयःपादः । द्वितीयंरूपमित्यर्थः ॥ ४ ॥ तृतीयपादस्यस्थानंवक्तुंस्थानस्वरूपंतावदाह । यत्रेति । यत्रदेशेसुप्तःअज्ञानावृतःसुंसुखरूपंभगवंतंप्राप्तइतिवा । प्राज्ञेनात्मना

**यत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नंपश्यतितत्सुषुप्तंसुषुप्तस्थानएकीभूतःप्रज्ञानघनएवानंदमयोह्यानंदभुक्चेतोमुखःप्राज्ञस्तृतीयःपादः ॥ ५ ॥**

संपरिष्वक्तइत्यादेः । कंचनकमपिकामंकाम्यमानमर्थंनकामयते । कंचनस्वप्नंस्वाप्नपदार्थंचनपश्यति । उपलक्षणमेतत् । स्वात्मकालाज्ञानानिविनाकिमपिनपश्यतीत्यर्थः । तत्स्थानंसुषुप्तमित्युच्यते । सुषुप्तमेवस्थानंयस्यससुषुप्तस्थानः । हृत्कर्णिकाग्रस्थइतियावत् । एकीभूतःवैश्वानरतैजसाभ्यांसंश्लेषविशेषरूपैकीभावंप्राप्तः । प्रज्ञानघनः । अविद्यावृतोजीवोघनइत्युच्यते । सुषुप्तिवेलायांजीवस्वरूपमज्ञानं तदुपलक्षितंकालंचेतित्रयंप्रज्ञापयतिजीवस्येति । प्रज्ञानघनः । प्रपूर्वादंतर्णीतण्यर्थाज्ज्ञावबोधनइतिधातोःकृत्यल्युटोबहुलमितिबहुलग्रहणात्कर्मणिल्युटिअनादेशे प्रज्ञानःप्रज्ञापितोघनोजीवोये

नसःप्रज्ञानघनइतिविग्रहः । यद्वाघनप्रज्ञइतिवक्ष्यमाणत्वादिहापिप्रज्ञानघनइत्यस्यघनप्रज्ञानइतिविपरीतसमासोध्येयः । तथात्वेंतर्णीतण्यर्थात्कर्तरिल्युट् । आनंदमयःआनंदप्रचुरःपूर्णानंदइतियावत् । यतोवाचोनिवर्ततइत्यादौप्रसिद्धमितिहे र्थः । आनंदभुक्विषयभोगान्विनैवानंदंभुंक्तेभोजयतिचेत्यानंदभुक् । अत्रस्थूलभुक्त्वंप्रविविक्तभुक्त्वं आनंदभुक्त्वंच नित्यपूर्णानंदानुभवरूपस्यक्रीडारूपंध्येयं । चेतोमुखः । ज्ञानस्वरूपमुखः । मुखइत्युपलक्षणं । ज्ञानरूपसर्वावयवइत्यर्थः । एतदानंदमयत्वचेतोमुखत्वरूपविशेषणद्वयंप्रागुक्तरूपद्वये नांतःप्रज्ञमितिवक्ष्यमाणचतुर्थरूपेचध्येयं । प्राज्ञःप्रकर्षेणनज्ञापय

**एषसर्वेश्वरएषसर्वज्ञएषोंतर्यामी । एषयोनिःसर्वस्यप्रभवाप्ययौहिभूतानां ॥ ६ ॥ अत्रैतेश्लो**
**काभवंति । बहिःप्रज्ञोविभुर्विश्वोह्यंतःप्रज्ञस्तुतैजसः । घनःप्रज्ञस्तथाप्राज्ञएकएवत्रिधास्मृतः॥७॥**

तीतिप्राज्ञः । जीवस्वरूपकालाज्ञानातिरिक्तंबाह्यंस्वाप्नंवाकिमपिनज्ञापयतीतिप्राज्ञनामकइत्यर्थः । प्रपूर्वान्नज्ञुपपदादंतर्णीत ण्यर्थादातश्चोपसर्गइतिकप्रत्ययः । आत्मनस्तृतीयःपादःतृतीयंरूपं ॥ ५ ॥ एवंरूपत्रयंनिरूप्यचतुर्थपादंनांतःप्रज्ञमित्यादि नानिरूपयिष्यन्वैश्वानरादिरूपाणामुक्तस्थानव्यापाराद्यर्थेषुश्लोकान्विवक्षुःमध्येवक्ष्यमाणचतुर्थरूपेणसहचतुर्णांरूपाणांमहि मानमाह । एषइति । एषउक्तवक्ष्यमाणचतूरूपआत्मा । एषइत्यस्याभ्यासस्तात्पर्यार्थः ॥ अंतर्यामीअंतर्नियंतासर्वस्ययोनिः कारणमित्यस्यविवरणंप्रभवाप्ययौहिभूतानामिति । हियस्मात्प्रभवाप्ययौप्रभवाप्ययहेतुरतइत्यर्थः ॥ ६ ॥ उपनिषत्स्वयंप्र



माणत्वेपिदार्ढ्यायस्वोक्तार्थेब्रह्मदृष्टान्मंत्रानुदाहरति । अत्रैतेश्लोकाभवंतीति । संवादिनइतिशेषः । वैश्वानरोबहिःप्रज्ञःतैज सोंतःप्रज्ञःप्राज्ञःप्रज्ञानघनइत्युक्तार्थेमंत्रमाह । बहिरिति । विश्वोवैश्वानरः पदानामर्थःपूर्ववद्ध्येयः । स्मृतइतिमंत्रद्रष्ट्राब्रह्म णास्मृतइत्यर्थः ॥ ७ ॥ जागरितस्थानःस्वप्नस्थानःसुषुप्तस्थानःइत्युक्तार्थेमंत्रमाह । दक्षिणाक्षीति । मुखेअग्रभागे । अंतरित्यस्य विवरणंमनसीति । आकाशेचहृदिहृदयाकाशेहृत्कर्णिकाग्रस्थाकाशइत्यर्थः ॥ ८ ॥ स्थूलभुगित्याद्युक्तार्थेमंत्रमाह । विश्वोहीति ।

**दक्षिणाक्षिमुखेविश्वोमनस्यंतस्तुतैजसः । आकाशेचहृदिप्राज्ञस्त्रिधादेहेव्यवस्थितः ॥ ८ ॥**
**विश्वोहिस्थूलभुङ्नित्यंतैजसःप्रविविक्तभुक् । आनंदभुक्तथाप्राज्ञस्त्रिधाभोगंनिबोधत ॥ ९ ॥**
**स्थूलंतर्पयतेविश्वंप्रविविक्तंतुतैजसं । आनंदंचतथाप्राज्ञंत्रिधातृप्तिंविजानथ ॥ १० ॥ त्रिषुधाम**
**सुयद्भोज्यंभोक्तायश्चप्रकीर्तितः । वेदैतदुभयंयस्तुसभुंजानोनलिप्यते ॥ ११ ॥**

निबोधतेति मंत्रद्रष्ट्राब्रह्मणास्वोपदेश्यान्प्रत्युच्यते । एवंविजानथेत्यपिध्येयं ॥ ९ ॥ उक्तएवार्थेमंत्रांतरंपठति । स्थूलमिति । स्थूलंभोग्यंवस्तुकर्तृविश्वंकर्म । एवमग्रेपि । नित्यतृप्तस्यस्थूलादिनातृप्तिःक्रीडारूपाध्येया । आनंदमानंदःलिंगव्यत्ययात् । वि जानथविजानीथ । विकरणव्यत्ययात् ॥ १० ॥ विश्वादिरूपत्रयस्वरूपंतत्स्थानेषुतद्भोज्यस्वरूपंजानतःफलमाह । त्रिष्विति । त्रिषुधामसुअक्षिमनोहृदयाकाशरूपेषुयद्भोज्यंस्थूलादि यश्चभोक्ताविश्वादित्रिरूपात्मा । एतदुभयंभोक्तृभोज्यलक्षणंउभयंयस्तु

योधिकारीवेदजानातिसज्ञानीविषयान्भुंजानःअनुभवन्नपितत्कृतलेपंनप्राप्नोति। तत्कृतोच्चत्वादिविकारंनप्राप्नोतीत्यर्थः॥११॥ एषयोनिस्सर्वस्येत्युक्तार्थेमंत्रमाह। प्रभवइति। प्रभवत्युत्पद्यतेनेनेतिप्रभवः। सर्वभावानांअशेषवस्तूनांयथायोगंउत्पत्तिहेतुश्चतूरूपआत्मेतियोज्यं। इतिसतांविनिश्चयइत्युक्त्याअसतामन्यथानिश्चयइतिलभ्यते तदग्रेविवरिष्यते। सर्वप्रभवत्वंव्यनक्ति। सर्वंजनयतिप्राणइति। सर्वस्यप्रणेतृत्वहेतुनाप्राणनामासर्वंजनयतीत्युक्त्यानपरिणामित्वादिरूपंसर्वप्रभवत्वमित्युक्तंभवति पुरुषःपूर्णषड्गुणत्वादिनापुरुषनामाप्रागुक्तचतूरूपात्माहरिःचेतोंशून्ज्ञानाख्यरश्मियुक्तान्जीवानितियावत्। पृथग्देवदा

**प्रभवस्सर्वभावानांसतामितिविनिश्चयः। सर्वंजनयतिप्राणश्चेतोंशून्पुरुषःपृथक्॥ १२ ॥ विभूतिंप्रसवंत्वन्येमन्यंतेसृष्टिचिंतकाः। स्वप्नमायासरूपेतिसृष्टिरन्यैर्विकल्पिता॥ १३ ॥**

नवमानवादिभेदेनजनयतीत्यर्थः ॥१२॥ सतामितिविनिश्चयइत्यत्रअसतांवैपरीत्येननिश्चयइत्यर्थात्प्राप्तंतदुभयंव्यनक्ति। विभूतिमित्यादिना। सृष्टिचिंतकाःसृष्टिविषयविचारवंतोन्येब्रह्मपरिणामवादिनोऽसंतःप्रसवंसृष्टिंविभूतिंजीवजडात्मनाविविधतयाभवनंब्रह्मणोमन्यंते। सृष्टिचिंतकाइत्यनेनयथावद्ब्रह्मस्वरूपानभिज्ञाइतिसूचितं। अन्यैर्ब्रह्मविवर्तःप्रपंचइतिवादिभिः सृष्टिर्विकल्पिताविविधतयाकल्पिता। कथं। स्वप्नमायासरूपेति। स्वाप्नपदार्थःसुप्तात्मविवर्तोयथातत्सरूपाब्रह्मविवर्तरूपा (मायासरूपा)। मायापदेनमायाविनिर्मितगंधर्वनगरादिग्रहः। तत्सरूपामिथ्याभूतेत्येवंविकल्पितेत्यर्थः॥ १३ ॥ परिणामवि

॥ ४ ॥

वर्तयोरभावेकथंहरेःसृष्टिरित्यतःसतांनिश्चयप्रकारमाह । इच्छेति । केवलमिच्छाइच्छामात्रं । अनायासेनाविलंबेनाविकारित्वेनचप्रभोःपूर्णशक्तेःसृष्टिः प्रभुकर्तृकाविश्वविषयिणीसृष्टिरितिसृष्टौसृष्टिविषयेविनिश्चिताविनिश्चयवंतोब्रह्मादयःसंतइत्यर्थः । कर्तरिक्तः । प्रकर्षेणभवतिशश्वदेकप्रकारेणवर्ततइति प्रभवतिसमर्थोवर्ततइति प्रकर्षेणभवत्यनुभवतिअखिलमिति प्रभुपदस्यव्युत्पत्तित्रयेणनिर्विकारत्वपूर्णशक्तित्वसर्वज्ञत्वरूपार्थत्रयपरत्वात्प्रभुपदेनैवपरिणामवादस्यविवर्तवादस्यमायासरूपत्ववादस्यचनिरासोध्येयः । सत्यसृष्टावशक्तस्यैवमायिकसर्जनात् । सर्वज्ञसृष्टस्यचस्वाप्नार्थसरूपत्वायोगादिति । पुनर्मतांतरा

इच्छामात्रंप्रभोस्सृष्टिरितिसृष्टौविनिश्चिताः । कालात्प्रसूतिंभूतानांमन्यंतेकालचिंतकाः
॥ १४ ॥ भोगार्थंसृष्टिरित्यन्येक्रीडार्थमितिचापरे । देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेति
॥ १५ ॥ प्रथमःखंडः ॥ १ ॥

ण्याह । कालादिति । कालचिंतकाःकालमेवपरंमन्वानाःभूतानांप्रसूतिंउत्पत्तिंकालान्मन्यंते । उपलक्षणमेतत् । विरिंचचिंतकाःविरिंचात् । रुद्रचिंतकाःरुद्रात्प्रसूतिंमन्यंतइत्येवंमतांतराण्यप्यत्रध्येयानि । तेषांनिरासःप्रभुपदेनैवज्ञेयः । हरेरेकस्यैवपूर्णशक्त्यादिमत्त्वेनान्येषांतदभावादिति । अतएवेच्छामात्रमित्यर्धस्यमध्येनिवेशः ॥ १४ ॥ तर्हिपूर्णस्यसृष्टिःकिमर्थेत्यतोलोकानुग्रहार्थंस्वभावइतिवक्तुंमतांतराण्याह । भोगार्थमिति । हरेरतृप्तस्यैवभोगार्थंसृष्टिरित्यन्येमन्यंते । अपरेतुमहा

राजस्यकंदुकादाविवक्रीडार्थंविश्वसृष्टिरितिमन्यंतइत्यर्थः । स्वमतमाहश्रुतिः । देवस्येति । देवस्यायंसृष्ट्यादिविषयःएषः इच्छाइच्छापूर्वकोव्यापारइतियावत् । इषुइच्छायांघञ् । स्वभावएवनप्रयोजनाय । कुतः आप्तकामस्यपूर्णकामस्यहरेः कास्पृहाप्रयोजनाशाका नकापीत्यर्थः । इतिशब्दोरूपत्रयनिरूपणसमाप्तौ ॥१५॥ इतिप्रथमःखंडः ॥ १ ॥ ॥ चतुर्थपादमात्म नआह । नांतःप्रज्ञमिति । अंतःप्रज्ञापयतीत्यंतःप्रज्ञःस्वाप्नार्थप्रदर्शकःसनेत्यर्थः । नबहिःप्रज्ञःजाग्रदर्थप्रदर्शकोनभव ति । नोभयतःप्रज्ञं । बाह्यंशब्दादिकंजानन्स्वाप्नार्थांश्चयदापश्यतिसापिकाचिद्दशाउभयतइत्यनेनगृह्यते । उभयतः

**नांतःप्रज्ञंनबहिःप्रज्ञंनोभयतःप्रज्ञंनप्रज्ञानघनंनप्रज्ञंनाप्रज्ञमदृष्टमव्यवहार्यमलक्षणमचिंत्यमव्यप देश्यमैकात्म्यप्रत्ययसारंप्रपंचोपशमंशिवमद्वैतंचतुर्थंमन्यंते ॥ सआत्मासविज्ञेयः ॥ १ ॥**

बाह्याभ्यंतररूपार्थान्प्रज्ञापयतीत्युभयतःप्रज्ञःसनेतिनोभयतःप्रज्ञं । नप्रज्ञानघनं । प्रागवद्विपरीतसमासःघनप्रज्ञानमिति । घनंअज्ञानावृतंसुप्तजीवस्वरूपंतदज्ञानंवानप्रज्ञापयतिप्राज्ञवदितिनघनप्रज्ञानं । नघनप्रज्ञानमेवनप्रज्ञानघनं । नप्रज्ञं प्रक र्षेणज्ञापयतिमानसवासनामयंध्येयंवस्त्वितिप्रज्ञंतन्नेतिनप्रज्ञं।विश्वतैजसप्राज्ञाख्यरूपत्रयव्यापारान्बाह्याभ्यंतरपदार्थस्वरूपज्ञा पनसुप्तस्वरूपज्ञापनरूपान् । किंचिद्बाह्यकिंचित्स्वप्नोभयज्ञापनरूपव्यापारंसमाधिस्थस्यनिरंतरज्ञानसंतत्युत्पादनरूपव्यापा रंचाकुर्वदित्यर्थः । नोभयतःप्रज्ञंनप्रज्ञमित्यत्रकिंरूपकर्तृकंव्यापारद्वयंअस्यनेत्युच्यतइतिविचारणीयं । तर्हिकिंनिर्व्यापारमे ॥ ५ ॥

वचतुर्थरूपंनेत्याह । नाप्रज्ञमिति । अप्रज्ञापकंनेतिनाप्रज्ञं । प्रज्ञापकमेव । मुक्तानांस्वस्वयोग्यसर्वज्ञानप्रदानरूप व्यापारकर्तेत्यर्थः । अदृष्टंविश्वादिरूपत्रयंबाह्याभ्यंतरपदार्थज्ञापनतद्व्यवहाररूपकार्यलिंगेनानुमेयं । नतथाचतुर्थरूपंदृश्यमि त्यदृष्टमितिवा । अमुक्तदृष्ट्यगोचरत्वाद्वादृष्टमित्यर्थः । अव्यवहार्यअग्राह्यमिति । मुक्तिंविनातद्रूपविषयकग्रहणव्यवहारयो रभावादव्यवहार्यमग्राह्यमित्युच्यते । अलक्षणं । लक्षणमनुमापकं । जाग्रदादिप्रवृत्तिरूपानुमापकराहित्यादलक्षणं । अत एवाचिंत्यं । अचिंत्यशक्तित्वादेवाव्यपदेश्यंव्यपदेष्टुमशक्यं । ऐकात्म्यप्रत्ययसारं । एकःप्रधानःआत्मापूर्णः । एकश्चासावा त्मा(पूर्णश्चए)चएकात्मा । एकात्मैवैकात्म्यंस्वार्थेष्यञ्प्रत्ययः । प्रत्ययोज्ञानरूपःसारआनंदरूपइत्यैकात्म्यप्रत्ययसारं । प्रपं चोपशमं । पचिविस्तारे । प्रपंचोविस्तृतःव्याप्तइतियावत् । उपशमःउपशब्दोत्रोत्कृष्टवाची । शमःसुखंउत्कृष्टानंदरूपं । प्रपं चश्चासावुपशमश्चप्रपंचोपशमःतं । सारमित्युक्त्याप्रतीतजीवसाम्यनिरासायोपशममित्युक्तिः । यद्वादेहसंबंधाद्यनिष्टप्रपंचंउ पशमयतिनिवर्तयतीतिप्रपंचोपशममिति । निर्दुःखसुखरूपत्वाच्छिवं । अद्वैतं । द्वीतिभावप्रधानं । द्वित्वेनवस्तुतत्वापेक्षया न्यात्मकत्वादिरूपद्वितीयेनप्रकारेणइतं । इण्गतौ । ज्ञातंवस्तुद्वीतं । द्वीतस्येदंद्वैतंमिथ्याज्ञानं । नविद्यतेद्वैतंमिथ्याज्ञानंय स्मात्तदद्वैतं । अहंममतादिमिथ्याध्यवसायनिवर्तकं । एतादृशमात्मनःचतुर्थपादंमन्यंतेब्रह्मादयइत्यर्थः । एतस्यस्थानंतुविष्णु स्तुरीयरूपेणद्वादशांतेव्यवस्थितइतिभाष्यदिशाध्येयं । सोयमात्माचतुष्पादितिप्रतिज्ञानंविश्वतैजसप्राज्ञतुरीयाख्यरूपचतु ष्टयंसपरिकरंनिरूप्य रूपत्रयविषयेमंत्रानुदाहृत्य चतुर्थविषयेमंत्रानुदाहरिष्यन्निदानींचतूरूपआत्मावश्यंज्ञातव्यइतिवदन्नु

पसंहरति । सआत्मेति । यइतिशेषः । सचतूरूपोयआत्मासविज्ञेयःविविधतयाचतुर्विधतयाविशेषेणमुमुक्षुभिर्ज्ञेयइति
॥ १ ॥ चतुर्थरूपस्योक्तंमाहात्म्यंसंवादयितुमाह । अत्रैतइति । तुरीयस्योक्तार्थएतेवक्ष्यमाणाब्रह्मदृष्टाःश्लोकाःसंवादिनोभवं
तीत्यर्थः । प्रपंचोपशममित्यादिनोक्तेसर्वानिष्टनिवर्तकत्वादिरूपेर्थेश्लोकमाह । निवृत्तेरिति । सर्वदुःखानांनिवृत्तेःकारणमि
तिशेषः । ईशानःईशान्मुक्ताननतिप्रेरयतीतीशानःप्रभुःस्वामी । अव्ययःशश्वदेकप्रकारःअद्वैतःमिथ्याज्ञाननिवर्तकः । सर्व
भावानांसर्वजीवानां विष्णोःभवंतिजायंतइतिवा । भुक्शुद्धिचिंतयोरितिकविकल्पद्रुमोक्त्याचिंतार्थस्यवा भवतेर्णप्रत्ययेभाव

अत्रैतेश्लोकाभवंति । निवृत्तेःसर्वदुःखानामीशानःप्रभुरव्ययः । अद्वैतःसर्वभावानांदेवस्तुर्यो
विभुःस्मृतः ॥२॥ कार्यकारणबद्धौताविष्येतेविश्वतैजसौ । प्राज्ञःकारणबद्धस्तुद्वौतुतुर्येनसिद्ध्यतः ॥३॥

इतिसिध्याभावाश्चेतनाइतिलाभात् । तेषांजीवानांदेवःप्राप्यः । गत्यर्थाद्दीव्यतेःकर्मणिघञ्प्रत्ययः । तुर्यस्तुरीयश्चतुर्थः । च
तुरश्छयतावाद्यक्षरलोपश्चेतिचतुश्शब्दस्याद्याक्षरलोपेयत्प्रत्ययेतुर्यइतिसिद्धेः । विभुःसमर्थः । स्मृतःमंत्रद्रष्ट्राब्रह्मणेतियोज्यं
॥२॥ नांतःप्रज्ञंनबहिःप्रज्ञमितियत्तुरीयस्यविश्वादिरूपत्रयवैधर्म्यमुक्तंतत्रमंत्रमाह । कार्येति । अज्ञानकार्यभूतोहंममतादिभ्र
मःतद्रूपजाग्रद्बद्धः । तत्कारणाविद्याबद्धः । जीवनिष्ठतादृशभ्रमरूपजाग्रत्कारणबंधस्वामीविश्वइत्यर्थः । तैजसस्तुअविद्याकार्य
भूतोक्तरूपस्वाप्नपदार्थभ्रमेणतत्कारणाज्ञानेनचबद्धः । जीवनिष्ठतादृशबंधस्वामीत्यर्थः । प्राज्ञस्तुतत्कारणाज्ञानरूपसुप्तिबद्धः

॥ ६ ॥

सुप्तिबंधस्वामी। तथाचसूत्रं । तदधीनत्वादर्थवदिति । तुर्येचतुर्थेरूपेद्वौकार्यकारणबंधनियमनव्यापारौवाकारणमात्रबंधनिय मनव्यापारौवाद्वावपिनसिध्यतः। नस्तइत्यर्थः॥ ३॥ नप्रज्ञानघनंनाप्रज्ञमित्युक्तप्राज्ञवैधर्म्येमंत्रमाह। नात्मानमिति। आत्मानं प्राज्ञःस्वस्वरूपंनसंवेत्तिनसंवेदयेत्। नपरान्नसत्यंनापिचानृतंसंवेदयेदित्यन्वयः । जीवस्वरूपसुखकालाज्ञानानिविनान्य त्किमपिनसंवेदयेदित्यर्थः। तुरीयस्तुसर्वदृक्सर्वंदर्शयतीतिसर्वदृक्। मुक्तौतत्तद्योग्यंसर्वंप्रदर्शयतीत्यर्थः। यद्वासर्वंपश्यतीत्ये वसर्वदृक् । सर्वप्रदर्शकइतिवक्तव्येप्येवमुक्तिःस्वातंत्र्याभिप्रायेण ॥ ४॥ शिवमद्वैतमितितुरीयस्ययन्मिथ्याज्ञाननिवर्त

**नात्मानंनपरांश्चैवनसत्यंनापिचानृतं। प्राज्ञःकिंचनसंवेत्तितुर्यंतत्सर्वदृक्सदा॥४॥ द्वैतस्याग्रहणं तुल्यमुभयोःप्राज्ञतुर्ययोः। बीजनिद्रायुतःप्राज्ञःसाचतुर्येनविद्यते ॥ ५॥ स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया। ननिद्रांनैवचस्वप्नंतुर्येपश्यंतिनिश्चिताः॥ ६॥**

कत्वमुक्तंतत्प्राज्ञस्यापिसममितिवदंस्ततस्तुरीयस्यवैलक्षण्यांतरमाह । द्वैतस्येति । द्वैतस्यदेहगेहादौस्वातंत्र्यस्याग्रहणंग्रह णाहेतुत्वं । देहादौस्वातंत्र्यभ्रमाजनकत्वंप्राज्ञतुर्ययोस्तुल्यंसमं । बीजेति । देहगेहादौस्वातंत्र्यबुद्धिबीजभूतामूलावि द्याबीजनिद्रा । तयायुतः । तद्युक्तत्वप्रदःप्राज्ञःसाचबीजनिद्रापीत्यर्थः ॥ ५ ॥ प्रकारांतरेणविश्वादेःसाधर्म्यवैधर्म्ये आह । स्वप्ननिद्रेति । उपलक्षणं । जाग्रत्स्वप्नभ्रमाभ्यांतद्धेतुनिद्राशब्दितातविद्ययाचयुतौबद्धौतदुभयबंधनियामकावा

द्यौविश्वतैजसौ । प्राज्ञस्तुअस्वप्ननिद्रयाद्विविधभ्रमविनाकृतकेवलाविद्ययायुक्तस्तन्मात्रबंधस्वामीत्यर्थः । निश्चिताःसम्यङ्निश्चयवंतःसंतः । ननिद्रांनिद्राकृतबंधस्वामित्वं । स्वप्नंद्विविधभ्रमहेतुत्वंनैवतुर्येरूपेपश्यंतिजानंतीत्यर्थः ॥ ६ ॥ एवंविधतुरीयरूपस्यदर्शनप्राप्तीकदाभवेतामित्यतआह । अन्यथेति । अन्यथागृह्णतःदेहगेहादौभगवदधीनेस्वाधीनतांजानतःस्वप्नोभवति । स्वप्नपदेनमिथ्याज्ञानरूपभ्रमपरंपराग्रहः । तत्वंभगवतःस्वातंत्र्यादिरूपंतत्वमजानतोनिद्रामूलाविद्याबंधोभवतितयोर्निद्राभ्रमयोर्विपर्यासेआवर्तनेक्षीणेसतितुरीयंपदंचतुर्थरूपमश्नुते । साक्षात्कारद्वाराप्राप्नोतीत्यर्थः ॥ ७ ॥ नि

**अन्यथागृह्णतःस्वप्नोनिद्रातत्त्वमजानतः । विपर्यासेतयोःक्षीणेतुरीयंपदमश्नुते ॥७॥ अनादिमाय**
**यासुप्तोयदाजीवःप्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतंबुध्यतेतदा ॥ ८ ॥**

द्राभ्रमयोरावर्तनक्षयःकेनस्यात् । यस्यक्षयेणभगवदपरोक्षधीरित्यतोभगवत्प्रसादेनैवेत्याह । अनादीति । मायाशब्देन भगवदिच्छातदधीनाऽविद्याचगृह्यते । अनादीतितंत्रं । अनादेर्विष्णोःअनादिमाययासुप्तःस्वापितःसंसारेनिवेशितोजीवो
यदाअनादिमाययाभगवदिच्छयाभगवत्प्रसादेनप्रबुध्यते । भगवानेवस्वतंत्रोन्यत्सर्वंतदधीनमित्यादितत्वज्ञानवान्भवति । ॥ ७ ॥
तदाअजंजननादिदोषरहितंअनिद्रमस्वप्नंविश्वादिरूपत्रयव्यापाराप्रवर्तकं । अद्वैतं । मिथ्याज्ञाननिवर्तकं । उपलक्षणं सर्वा

निष्टनिवर्तकंभगवंतंबुध्यतेसाक्षात्करोतीत्यर्थः ॥ ८ ॥ ननुदेहगेहादौस्वस्वामिसंबंधादिरूपबंधस्यजीवस्वरूपस्येवस्वाभाविकत्वेननिवृत्त्ययोगाद्विपर्यासेतयोःक्षीणइत्युक्तिःकथमित्यतोनायंस्वाभाविकइत्याह। प्रपंचइति। देहगेहादौस्वस्वामिसंबंधादिरूपोबंधःप्रपंचःस्वातंत्र्येणनास्त्येव। यदिपराधीनोपिविद्येतविद्यतइत्यंगीक्रियेतततर्ह्यपिपरमार्थतःपरमश्चासावर्थश्चपरमार्थःउत्तमोर्थोभगवान्। तस्मात्परमार्थतःपरमेश्वरप्रसादादितियावत्। निवर्तेतनिवर्ततएवनसंशयः। अनादितोनुवृत्तस्यदेहादौस्वीयत्वज्ञानरूपभ्रमस्यकथंनिवृत्तिरित्यतआह। मायेत्यादिना । अद्वैतंमहद्भिर्यथावत्तयाज्ञातंब्रह्मादिवस्तुजातमद्वैतं । अन्यैर्द्वैतंद्वि

**प्रपंचोयदिविद्येतनिवर्तेतनसंशयः । मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः ॥९॥ विकल्पोविनिवर्ते**
**तकल्पितोयदिकेनचित् । उपदेशादयंवादोज्ञातेद्वैतंनविद्यतइति ॥ १० ॥ द्वितीयःखंडः ॥ २ ॥**

तीयेनप्रकारेणज्ञानंतद्वैपरीत्येनज्ञातं । तच्चमिथ्याज्ञानं । तेषांमायामात्रं । माययाभगवदिच्छयामात्रंनिर्मितंजातमित्यर्थः । तथा चतादृशमिथ्याज्ञानस्यानादितोनुवृत्तस्यापीश्वरेच्छयाजातत्वेनास्वाभाविकत्वात्तत्प्रसादेनतन्निवृत्तिर्युक्तेतिभावः॥९॥ उक्तमेवपूर्ववाक्यार्थंविशदयन्नुपसंहरति । विकल्पइति । देहगेहादौस्वीयताभिमानादिनानात्मकबंधरूपोविकल्पःउक्तरीत्यास्वाभाविकोयदिकेनचिदज्ञानादिनाकारणेनस्वाभाविकत्वेनकल्पितः । तर्ह्यपिउपदेशात्महतामुपदेशबलान्निवर्तेतनिवर्ततएव । कः सतांवादःयदुपदेशान्नानाविधस्वातंत्र्यादिभ्रमनिवृत्तिरित्यतआह । ज्ञातइति । ब्रह्मणियथावत्तयाज्ञातेसतिद्वैतंशिवमद्वैत

मित्यत्रोक्तव्युत्पत्त्यामिथ्याज्ञानंनविद्यते निवर्ततइत्ययंसतांवादइत्यर्थः । इतिशब्दस्यइत्येतेश्लोकाभवंतीतिपूर्वेणान्वयः । त
त्वनिर्णयतट्टीकयोरनुव्याख्यानसुधयोश्चैतत्श्लोकद्वयंभेदपंचकस्यसत्यत्वानादित्वयोरुपपादनपरतयाव्याख्यातं ॥१०॥ इति
द्वितीयःखंडः॥२॥ ॥एवंसमग्रोंकारप्रतिपाद्यस्यात्मनोविश्वादिरूपचतुष्टयंनिरूप्यतेषांरूपाणामकारादिप्रणवांशप्रतिपाद्यत्वादि
माहात्म्यंवक्तुंउक्तमनुवदति । सोयमात्माध्यक्षरमोंकारइति । ओमित्याक्रियमाणतयोंकारशब्दितः सोयंचतुरात्मकत्वेनोक्त
आत्माध्यक्षरं । (अधि )सर्वतोधिकंचतदक्षरमविनाशिचेत्यध्यक्षरं । शब्दस्वाभाव्यान्नपुंसकता । कीदृशमक्षरमित्यतआ

**सोयमात्माध्यक्षरमोंकारोऽधिमात्रंपादामात्राअकारउकारोमकारइति । जागरितस्थानोवैश्वा नरोकारःप्रथमामात्रा । आप्तेरादिमत्त्वाद्वाआप्नोतिहवैसर्वान्कामानादिश्चभवति । यएवंवेद ॥ १ ॥**

ह । अधिमात्रमिति । अधिकामात्राअंशायस्यतदक्षरमधिमात्रं । मात्राःकाइत्यतआह । पादामात्राइति । पद्यंतइतिपादाः
विश्वादिरूपाणि । पादाःकइत्यतःअकारादिप्रतिपाद्याविश्वादयइत्याह । अकारइति । अइत्याक्रियतेआहूयतेप्रतिपाद्यत
इत्यकारोविश्वः । एवमुक्तदिशाउकारस्तैजसः । मकारःप्राज्ञः । उपलक्षणमिदं । नादबोध्यस्तुरीयोपिनादइतिशेषोक्त्याग्रा
ह्यः । अवर्णप्रतिपाद्यंरूपंस्थानोक्त्यानिर्दिशति ॥ जागरितेति । अकारः अइत्याक्रियमाणः प्रथमामात्रा । (समस्तप्र)
समग्रप्रणवप्रतिपाद्यस्याक्षर(नाम्नःआत्मनःप्र )स्यप्रथमोंशइत्यर्थः । अत्रजागरितस्थानःप्रथमामात्रावैश्वानरइत्यनूद्यअकार

इत्यवर्णप्रतिपाद्यत्वंविधीयतइतिनपौनरुक्त्यमितिबोध्यं। एवमग्रेपि। वैश्वानरस्यावर्णवाच्यत्वेनिमित्तद्वयमाह। आप्तेरादिम त्त्वाद्वेति। तत्तज्जीवयोग्यभोग्यविषयान्भोगान्आपयतिप्रापयतिविश्वइत्यइत्युच्यतेविश्वइत्यर्थः। आप्लृव्याप्तौअंतर्णीतण्य र्थाड्डप्रत्ययेअइतिरूपमितिभावः। प्राज्ञस्तैजसश्चादीअस्येतिआदिमान्तस्माद्वाअइत्युच्यतइत्यर्थः। सुषुप्तौस्वप्नेचप्राज्ञतैजसा भ्यामेकीभूतोविश्वःसुप्तेरुत्थानेप्राज्ञात्स्वप्नादुत्थानेतैजसाद्वि(भक्त)विक्तस्सन्दक्षिणाक्षिस्थानमायातीति तयोरादितया विश्वस्यतदादित्वमितिभावः। एतन्निमित्तद्वययुक्तत्वेनावर्णवाच्यत्वंविश्वस्यजानतःफलमाह। आप्नोतिहवाइति। यो

**स्वप्नस्थानस्तैजसउकारोद्वितीयामात्रा। उत्कर्षादुभयत्वाद्वा। उत्कर्षतिहवैज्ञानसंततिंसमान श्चभवतिनास्याब्रह्मवित्कुलेभवति। यएवंवेद॥ २॥**

धिकारीएवमकार(वाच्य)त्वंविश्वस्यवेद। अस्येतिशेषः। अस्यवेदितुःसविश्वःसर्वान्स्वयोग्यान्सर्वान्कामान्काम्यमानानाप्नो तिप्रापयति। अंतर्णीतणिच्। आदिश्च विश्वएवंवेदितुरादिश्चभवति। आविर्भूतस्वरूपतयामुक्तरूपेणततउत्पद्यतेतज्ज्ञानी तितस्यायमादिःकारणंभवतीत्यर्थः। यद्वाऽऽदिश्चेत्यत्रैवास्येतिशेषः। आप्नोतीत्यत्रतुसज्ज्ञानीतिशेषोध्येयः॥ १॥ कोद्वि तीयःपादःयउकारइत्युक्तइत्यतआह। स्वप्नस्थानइति। स्वप्नस्थानोद्वितीयामात्राआत्मनोद्वितीयोंशः। तैजसउकारःउइत्या क्रियमाणत्वादुकारइत्युक्तः। उवर्णवाच्यत्वेनिमित्तद्वयमाह। उत्कर्षादुभयत्वाद्वेति। जाग्रद्दशायांविद्यमानदेहाभिमानादु त्थाप्यदेहाभिमानंत्याजयित्वास्वप्नमंडलेजीवंकर्षतीत्युत्कर्षणाद्धेतोर्वाबाह्याज्ञप्तिरूपनिद्रांवासनामयविषयानुभवंचप्रयच्छती

त्युभयत्वात्उभयहेतुत्वाद्वानिमित्तात् । उइत्युच्यतेतैजसइत्यर्थः । तथावेदितुःफलमाह । उत्कर्षतिहवाइति । योधिकारीएवं निमित्तद्वययुक्ततयोकारवाच्यतैजसंवेदसज्ञानीज्ञानसंततिंज्ञानधारांज्ञाननित्यत्वमितियावत् । आप्नोतीत्यनुषंगः। उत्कर्षतिदे हबंधादात्मानंउत्कर्षतिउद्धरति।उत्कृष्यचसमानश्च।मानमंतर्गतिस्स्मृतेत्युक्तेःमानसहितःसमानःसर्वमोक्षिणांअंतर्गतस्तन्मध्य स्थोभवतीत्यर्थः। दोषाभावात्स्नेहाच्चेतिभावः । अस्यज्ञानिनःकुलेअब्रह्मविन्नभवति । ब्रह्मज्ञानिसंततिरेवभवतीत्यर्थः ॥२॥ क स्तृतीयःपादःकथमस्यमकारत्वं । किंचतज्ज्ञानिनःफलमित्यतस्तत्सर्वंक्रमादाह । सुषुप्तस्थानइति । सुषुप्तस्थानस्तृतीयामात्रा

**सुषुप्तस्थानःप्राज्ञोमकारस्तृतीयामात्रा । मितेरपीतेर्वा । मिनोतिहवाइदंसर्वमपीतिश्चभवति । यएवंवेद ॥ ३ ॥ तत्रैतेश्लोकाभवंति । विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटं । मात्रासंप्रतिपत्तौस्यादाप्तिसामान्यमेवच ॥ ४ ॥**

आत्मनस्तृतीयोंशःप्राज्ञः मकारःमइत्याक्रियमाणः। कुतःमितेरपीतेर्वा । स्वात्मनिजीवमंतर्गमयतीतिस्वांतर्गमनहेतोर्वावृत्तिज्ञा नस्यापीतेरप्ययशब्दितलयकारणाद्वामइत्याक्रियतइत्यर्थः । योधिकारीएवंनिमित्तद्वययुक्तत्वेनमकारवाच्यंप्राज्ञंवेद । सज्ञानी इदंसर्वंयथायोग्यंजगन्मिनोतिस्वांतर्गमयति । जीवानामणुत्वेप्यधिकारिणःसूर्यादेरिवप्रकाशतोव्याप्तिरस्तीतितन्मध्येंतर्गमय तिमुक्तःसन्नितिभावः । अपीतिश्चभवति । अप्ययकृच्चभवतिदुःखाद्यनिष्टस्येत्यर्थः ॥३॥ एवंरूपत्रयंप्रणवगताकारादिवर्णत्रय प्रतिपाद्यमुक्त्वाचतुर्थरूपममात्रश्चतुर्थइत्यादिनाग्रेविवक्षुःप्रागुक्तरूपत्रयज्ञानिनोयानिफलान्युक्तानितत्रब्रह्मदृष्टश्लोकान्प्रमा



णयति । तत्रैतइति । तत्ररूपत्रयज्ञानिफलेएतेवक्ष्यमाणश्लोकाःसंवादिनोभवंति । क्रमेणतान्मंत्रान्पठति । विश्वस्येति । अत्ववि वक्षायामिति । विवक्षापदेनोपासनंग्राह्यं । आदिमत्त्वाद्वेत्यत्रोक्तदिशाआदिमत्त्वनिमित्तेनप्रणवैकदेशाकारवाच्यत्वोपासना यांसत्यामुपासकस्यादिसामान्यंआदिश्चेत्यत्रोक्तदिशाऽऽदिमत्त्वसामान्यंआदिमत्त्वेनविश्वसाम्यंभवति । उत्कटंस्पष्टमेतत् । तंयथायथोपासतेतदेवभवतीत्यादेरितिभावः। मात्रासंप्रतिपत्तौआत्मनोंशोविश्वः। आप्तिनिमित्तेनप्रणवांशाकारार्थइतिविश्व रूपांशध्यानेध्यातुराप्तिसामान्यमेवस्यात् । सर्वकामावाप्त्याचविश्वसाम्यमेवभवेदित्यर्थः ॥ ४ ॥ तैजसस्योत्वविज्ञानेप्रागुक्त

**तैजसस्योत्वविज्ञानेउत्कर्षोदृश्यतेस्फुटं । मात्रासंप्रतिपत्तौस्यादुभयत्वंतथाविधं ॥ ५ ॥ मकार भावेप्राज्ञस्यमानसामान्यमुत्कटं । मात्रासंप्रतिपत्तौतुलयसामान्यमेवच ॥ ६ ॥**

रीत्योत्कर्षनिमित्तेनप्रणवैकदेशोकारवाच्यत्वोपासनायांतस्योपासकस्योत्कर्षतीत्यत्रोक्तदिशास्फुटमुत्कर्षोदृश्यतेप्रमाणप्रमितइ त्यर्थः । मात्रासंप्रतिपत्तौप्रागुक्तदिशोभयहेतुत्वनिमित्तेनप्रणवांशोकारवाच्यत्वेनात्मांशतैजसध्यानेतस्यध्यातुःतथाविधंप्रागु क्तंज्ञानसंततिरूपंसमानत्वंचेत्युभयत्वंस्यादित्यर्थः ॥ ५ ॥ प्राज्ञस्यमकारभावेमकारत्वेप्रागुक्तमितिरूपनिमित्तेनप्रणवैकदेशम वर्णवाच्यत्वेविज्ञातेसतिमानसामान्यंसर्वांतर्भावरूपमानेनप्राज्ञसाम्यमुत्कटंस्फुटमित्यर्थः । मात्रासंप्रतिपत्तौबाह्यादिज्ञानल यकृत्त्वनिमित्तेनप्रणवाशमकारवाच्यत्वेनात्मांशप्राज्ञध्यानेतुध्यातुर्लयसामान्यंदुःखादिलयकृत्त्वेनप्राज्ञसाम्यमेवचस्यादित्य

र्थः ॥ ६ ॥ विश्वादिरूपाणामत्वोत्वमकारभावज्ञानिनोयदादिसामान्यादिफलमुक्तंतद्वाढ्र्यायविश्वादेरत्वादिज्ञानिनआदि
सामान्यादिकंफलमितियोजानातितस्याप्यस्तिफलमित्याह । त्रिष्विति । त्रिषुधामसुत्रिषुरूपेषुउक्तविधयाध्यातेषुसत्सुध्या
तुःपुरुषस्ययत्तुल्यंध्येयविश्वादि(सद्दशंआ)साद्दश्यंआदिमत्वादिसामान्यं(तद्भव)भवतीतिनिश्चितंयथातथावेत्ति सवेदिताम
हामुनिःसर्वभूतानांपूज्योवंद्यश्चैवभवतीत्यर्थः ॥ ७ ॥ विश्वादिरूपोपासकानांसर्वकामावाप्त्यादिफलमुक्तंप्राक् । इदानींवि
श्वादिप्राप्तिरूपफलंचाह । अकारइति । अइत्याक्रियमाणोविश्वःस्वात्मोपासकंविश्वंस्वात्मानंनयतेप्रापयति । उकारश्चापितै

**त्रिषुधामसुयत्तुल्यंसामान्यंवेत्तिनिश्चितं । सपूज्यस्सर्वभावानांवंद्यश्चैवमहामुनिः ॥ ७ ॥**
**अकारोनयतेविश्वमुकारश्चापितैजसं । मकारश्चपुनःप्राज्ञंनामात्रेविद्यतेगतिरिति ॥ ८ ॥**
**तृतीयःखंडः ॥ ३ ॥**

जसमित्यादौनयतइत्यनुकर्षः । प्राग्वद्व्याख्या । पुनःप्राज्ञमितिपुनःशब्दःप्रत्यहंसुप्तौप्राप्तिसत्त्वेपिस्थानविशेषेमुक्तौतत्प्राप्त्य
भिप्रायेणेतिज्ञेयं । तुरीयोपासकस्यकथमित्यतस्तस्यापितत्प्राप्तिरस्तीत्याह । नामात्रइति । अमात्रेऽनंशेविश्वतैजसयोःप्राज्ञे
नप्रतिदिनंएकीभावोविभागश्चास्तीतिमात्रात्वं । तुरीयस्यतुतन्नेत्यमात्रइत्युच्यतेतुरीयः । अमात्रेचतुर्थेअगतिःतत्प्राप्त्यभावः ।
तदुपासकस्यनविद्यते । विद्यतएवगतिरित्यर्थः । तुरीयेस्तिगतिरितिवक्तव्येअगतिर्नविद्यतइत्युक्तिःविश्वादेरिवबाह्या ॥ १० ॥
दिव्यवहारकारणत्वंनविद्यतेयथातथागम्यत्वमपिनेतिशंकायांतन्निरासार्थमितिज्ञेयं ॥ ८ ॥ इतितृतीयःखंडः ॥ ३ ॥

नांतःप्रज्ञमित्यादिनोक्ततुरीयगुणानुवादपूर्वंतुरीयस्यनादप्रतिपाद्यत्वमाह । अमात्रइति । अमात्रोऽव्यवहार्यःप्रपंचोपशमः शिवोऽद्वैतश्चतुर्थइत्यनुवादः । ॐकारःप्रणवैकदेशनादप्रतिपाद्यइतिनादप्रतिपाद्यत्वंविधेयं । अमात्रइत्यादिपदानांप्रागुक्तरीत्यार्थोध्येयः । अदृष्टमव्यवहार्यइत्यादिनाप्रागुक्तस्याव्यवहार्यत्वादेःपुनरत्रानुवादोऽव्यवहार्यत्वादिकमुपासकेपिसमंमुक्तावपीतिदर्शयितुमितिज्ञेयं । नादप्रतिपाद्यत्वेनतुरीयोपासकस्यफलमाह । आत्मेति । योधिकारीएवममात्रत्वाव्यवहार्यत्वादिनाॐकारमोंकारैकदेशनादप्रतिपाद्यंवेदजानाति । सआत्मैवशुद्धात्मैवसन्देहगेहादावन्यत्रममताद्यभिमानत्यागीभूत्वेतियावत् ।

**अमात्रश्चतुर्थोऽव्यवहार्यःप्रपंचोपशमःशिवोद्वैतॐकारआत्मैवसंविशत्यात्मनात्मानंयएवंवेद ॥ ॥ १ ॥ अत्रैतेश्लोकाभवंति । ओंकारंपादशोविद्यात्पादामात्रानसंशयः । ओंकारंपादशोज्ञात्वानकिंचिदपिचिंतयेत् ॥ २ ॥**

आत्मनापरमात्मनातत्प्रसादेनेतियावत् । आत्मानंनादबोध्यंतुरीयात्मानंसंविशतिप्रविशति । प्रविश्यचबहिरंतःस्वेच्छयास्वयोग्यभोगान्भुंजानःसुखमास्तइतिभावः ॥ १ ॥ प्रणवावयवाकारादिप्रतिपाद्यभगवद्रूपज्ञानमन्यस्मरणत्यागेनसंपाद्यमित्यत्रमंत्रान्ब्रह्मदृष्टानाह । अत्रैतइति । अत्रेत्युक्तार्थेओंकारमोमित्याक्रियमाणमात्मानंसमग्रप्रणवप्रतिपाद्यंपादशःपादैःपद्यंतेप्राप्यंतेस्वोपासकैरितिपादैर्विश्वाद्यंशैर्विद्यात् । विश्वादिचतूरूपात्मनाजानीयात् । पादाःकिंरूपाइत्यतआह । पादामात्राइति । प्रणवांशभूताकारादिप्रतिपाद्याइत्यर्थः । ॐकारंप्रणववाच्यंपादशःचतूरूपतयाज्ञात्वाकिंचिदपिनचिंतयेत् । इतरचिंतयाजा

यमानफलस्यततोधिकफलस्यचैतज्ज्ञानादेवसिद्धेरितिभावः ॥ २ ॥ संसारभयंतितीर्षुणाॐकारोभगवान्सर्वथाध्येयइत्यत्रश्लो
कंपठति । युंजीतेति । प्रणवेहरौचेतोमनःयुंजीततद्विषयंकार्यं । कीदृशःप्रणवइत्यतआह । प्रणवोब्रह्मेति । गुणैर्बृंहणात्पू
र्णत्वात्विश्वादिरूपचतुष्टयात्मकःप्रणवःनिर्भयंब्रह्मगुणपूर्णइतिविश्वादिचतूरूपोहरिर्जाग्रदाद्यवस्थाप्रणयनात्प्रणवइत्युच्यते।
प्रपूर्वान्नयतेरच्प्रत्ययेधा(त्विकारस्योकारादे)तोर्नुशब्दादेशेगुणावादेशणत्वेषुप्रणवइतिसिद्धेः । फलमाह । प्रणवेनित्ययुक्त
स्येति । नित्यंध्यायिनइत्यर्थः । क्वचित्केनापिनिमित्तेनेत्यर्थः । फलसाम्यार्थमेवप्राङ्निर्भयमितिविशेषणोक्तिः ॥ ३ ॥ विश्वा

युंजीतप्रणवेचेतःप्रणवोब्रह्मनिर्भयं । प्रणवेनित्ययुक्तस्यनभयंविद्यतेक्वचित् ॥ ३ ॥ प्रणवोह्यपरं
ब्रह्मप्रणवश्चपरंस्मृतः । अपूर्वोनंतरोबाह्योनपरःप्रणवोऽव्ययः ॥ ४ ॥

दिरूपाणामन्योन्यंमूलरूपेणचनगुणतारतम्यमित्याह । प्रणवोहीति । अपरंअपरःपूर्वतनोमूलरूपपूर्वावतारात्माप्रणवोहरिः
ब्रह्मपूर्णःहिप्रसिद्धमेतत् । सर्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षतइत्यादाविति भावः । परंपश्चात्तनोविश्वाद्यवताररूपःप्रणवोहरिश्च
ब्रह्मपूर्णइत्याकर्षः ॥ स्मृतःश्लोकद्रष्ट्राब्रह्मणेतियोज्यं । पूर्वावतारेपश्चिमावतारेचपूर्णतैव । नक्वचिदपिन्यूनतेतिभावः । तथा
चसूत्रं । नस्थानतोपिपरस्योभयलिंगंसर्वत्रहीति । प्रणवोब्रह्मेत्युक्तंपूर्णत्वंव्यनक्ति । अपूर्वइति । नविद्यतेपूर्वंकारणंयस्यसोपू
र्वः । (प्रणवः)कारणहीनः । नाशाभावादनंतरः । अंतशब्दपर्यायोत्रांतरशब्दः । सर्वगतत्वादबाह्यः । पराधीनस्थित्यभावा ॥ ११ ॥

दनपरः । अव्ययःशश्वदेकप्रकारःप्रणवोहरिः ॥ ४ ॥ सर्वस्यादिःकारणं । मध्यंस्थितिकर्ता । तथांतःनाशकश्चएवेतिनिश्चय
माह । ज्ञानिनःफलमाह । एवंहीति । एवंब्रह्मत्वादिनाप्रकारेणप्रणवंहरिंज्ञात्वातदनंतरंप्रारब्धभोगानंतरंतद्ब्रह्मव्यश्नुते । वि
शेषेणप्राप्नोति । तत्प्राप्तेःसदासत्त्वेपिस्थानादिविशेषाभिप्रायेणवीत्युक्तिः ॥ ५ ॥ प्रणवस्यहरेर्महिमांतरमाह । प्रणवंहीति ।
ईश्वरंसर्वनियामकंॐकारंॐमित्याक्रियमाणंमत्वानशोचतिमुक्तोभवतीत्यर्थः ॥ ६ ॥ एवमुक्तांसमस्तव्यस्तप्रणवाभिधेयभगव

सर्वस्यप्रणवोह्यादिर्मध्यमंतस्तथैवच । एवंहिप्रणवंज्ञात्वाव्यश्नुतेतदनंतरं ॥ ५ ॥ प्रणवंहीश्वरंवि
द्यात्सर्वस्यहृदयेस्थितं । सर्वव्यापिनमोंकारंमत्वाधीरोनशोचति ॥ ६ ॥ अमात्रोनंतमात्रश्चद्वै
तस्योपशमःशिवः । ॐकारोविदितोयेनसमुनिर्नेतरोजनः । समुनिर्नेतरोजनइति ॥ ७ ॥ चतुर्थः
खंडः ॥ ४ ॥ इतिश्रीमांडूकोपनिषत्समाप्ता ॥ ॥ ॥ ॥ ॥

दुपासनामनुवदंस्तज्ज्ञानिनःस्तवेनोपसंहरति । अमात्रइति । अमात्रःभिन्नांशहीनःअनंतमात्रःविश्वाद्यनंतांशः । द्वैतस्योपश
मःसर्वानिष्टनिवर्तकः । शिवःनिर्दुःखसुखरूपःॐकारःॐमित्याक्रियमाणःयेनविदितोज्ञातःसमुनिःमननशीलःनेतरइति ।
द्विरुक्तिरुक्तसर्वप्रमेयावधारणार्था ॥७॥ चतुर्थःखंडः ॥ ४ ॥ प्रणवप्रतिपाद्यायचतुर्मूर्तिस्वरूपिणे ॥ नमःश्रीप्राणनाथायभक्ता
भीष्टप्रदायिने ॥ इतिमांडूकोपनिषदर्थानांसंग्रहोत्रयः ॥ राघवेंद्रकृतस्तेनप्रीयतांकमलापतिः ॥ मांडूकोपनिषत्खंडार्थःसंपूर्णः

(अयं ग्रंथः अ० रामाचार्य, टी. आर्. कृष्णाचार्यनामभ्यां मुंबय्यां निर्णयसागरमुद्रणयंत्रे मुद्रयित्वा प्रकाशितः । शके १८१८)

